# श्रीगुरुस्तुती

{॥ श्रीगुरुस्तुती ॥}

यो बभाणाभणन्नेव मुनिभ्यो ब्रह्म निर्द्वयम् ।

दक्षिणामूर्तये तस्मै प्रज्ञानगुरवे नमः ॥ १॥

स्थापितं ब्रह्मनिष्ठेन येनाद्वैतमतं भुवि ।

तस्मै शङ्करसंज्ञाय विज्ञानगुरवे नमः ॥ २॥

अंशावतारः स्कन्दस्य विश्वाचार्यो विदां वरः ।

प्रणम्यते महाभागो रमणो भगवानृषिः ॥ ३॥

दक्षिणामूर्तिसारम्भां शङ्कराचार्यमध्यमाम् ।

रमणाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ४॥

तिमिराणि न केवलं वचोभिः

करुणापाङ्गविलोकितैश्च नृणाम् ।

हृदये प्रसरन्ति मर्दयन्तं

भगवन्तं रमणं गुरुं नमामि ॥ ५॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य

नरसिंहसूनोः गणपतेः कृतिः श्रीगुरुस्तुतिः समाप्ता ॥

अनुष्टुब्वृत्तम् (१-४) । सुबोधितावृत्तम् (५)

Encoded and proofread byDPD

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org

Guru Stuti Lyrics in Devanagari PDF
% File name : shrIgurustutiH.itx
% Location : doc_deities_misc
% Author : Ganapati Muni with Ramana Maharshi
% Language : Sanskrit
% Subject : philosophy/hinduism/religion
% Transliterated by : DPD
% Proofread by : DPD
% Description-comments : From Complete Works of Ganapati Muni Vol 1
% Latest update : November 24, 2012
% Send corrections to : Sanskrit@cheerful.com
% Site access : http://sanskritdocuments.org
%